अथ द्वितीयः पादः

शिवाभिधेयेन व्यावहार ईश्वरः ॥ १ ॥ अव्यक्तः ॥ २ ॥ व्यक्तेस्त्रिधा ॥ ३ ॥ न चैकतः ॥ ४ ॥ तथा तस्य शक्तिः ॥ ५ ॥ तुर्यशक्तिरपि श्रुतेः ॥ ६ ॥ न तथा व्यावहारेशः ॥ ७ ॥ तेन शक्तिर्न तदधीना ॥ ८ ॥ न शिवो बिम्बभूतः ॥ ९ ॥ बिम्बभूतो गणेशः ॥ १० ॥ गुणत्रयैरव्यशान्तिमूलप्रकृतिगतः ॥ ११ ॥ तन्निष्ठा शक्तिर्बिम्बभूता ॥ १२ ॥ शिवादिकारणवाक्यैः शक्तिरेवेति हयग्रीवः ॥ १३ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः ॥

ब्रह्म वा इदमग्र आसीत् ॥ १ ॥ आत्मा वा इदमग्र आसीत्

---

अथ नन्दिकेशमतं निरासयति—शिवाभिधेयेनेति। नन्दिकेशमते यच्छिव-शब्देन परमतत्त्वतया प्रतिपादितं स व्यावहारिक ईश्वर एवाव्यक्तरूपः। तस्मात्परमेव शक्तितत्त्वम्। व्यक्तेस्त्रिधेति। व्यक्तास्त्रिधेति पाठः स्यात्। ईश्वरतत्त्वं शिवरूपं व्यक्तं सद्ब्रह्मविष्णुरुद्ररूपेण त्रिधा भवति। तुर्यशक्तिरपि श्रुतेः। तुर्यमात्मतत्त्वमेव शक्तिरिति श्रुतिः। शक्तिरियं न ईशाधीना। अस्याः शक्तेर्बिम्बभूतो गणेशो न तु शिवः। शिव आदिकारणमिति यानि वाक्यानि प्रतिपादयन्ति तानि सर्वाणि शक्तिपराणि योजनीयानि ॥

इति नन्दिकेशमतनिरासो नाम षष्ठितमं प्रकरणम् ॥

अथ महावाक्यतात्पर्यप्रदर्शकं बादरिमतं प्रदर्शयति—*ब्रह्म वा इदमग्र* इति। तत्र ब्रह्मैवाद्वितीयं परं तत्त्वमिति प्रतिपादयद् बृहदारण्यकोपनिषद्गतं (बृ. १।४।१०,११) मैत्र्युपनिषद्गतं (मैत्री ६-१७) महावाक्यं प्रदर्शयति। छान्दोग्योपनिषद्गतं (छा. ३।१४।१) सर्वं खल्विदं ब्रह्मेति वाक्यमपि विचारणीयम्। तदनन्तरमात्मा वा इदमेक एवाग्र आसीदिति आत्मैक्यप्रतिपादकमैतरेयोपनिषद्गत-(ऐ. उ. १।१) मात्मैक्यप्रतिपादकं महावाक्यमभिधत्ते। तदनन्तरं सदेव सोम्येदमग्र आसीदिति च्छान्दोग्योपनिषद्गतं सदैक्यं प्रतिपादयन्महा-